न परक्षेत्रागारे गां चरन्तीं परस्मै कथयेत्। न गोब्राह्मणो-परोधेऽश्नीयात्। न वाद्यमाने वाद्यतामिति ब्रूयात्। उपरोधे आसने सति।

बौधायनः,—

नायुक्ता रुक्षाः परुषा वाचो ब्रूयात्।

हारीतः,—

न गां चरन्तीं परक्षेत्रावतीर्णामाचक्षीत पिबन्तं परवत्सकम्।

आपस्तम्बः,—

वर्ज्जयेत् स्तुतिं गुरोः सुस्नातमिति।

सुस्नातमिति स्नानप्रशंसनम्।

तथा वाक्येन वाक्यस्य प्रतिघातमाचार्य्यस्य विवर्ज्जयेत्। श्रेयसाञ्च। सर्व्वभूतपरीवादाक्रोशांश्च। विद्यया च विद्यानाम्।

श्रेयसां प्रशस्तानां प्रतिघातं विवर्ज्जयेत् सर्व्वभूतपरी-वादाक्रोशांश्च वर्ज्जयेदित्यर्थः। विद्यया विद्यानां प्रतिघातं वर्ज्जयेत्।

शांख्यायनगृह्यम्,—

न जनसमवायं गच्छेत्। नोपविशेत्। समेनेत्याक्रोशनो-ऽपिशुनोऽकुलं कुलं नेतिहेतिह स्यात्।

कुलं कुलप्रयोजनं विना परगृहगमनशीलः। इतिहेतिह इतिवृत्तमिति प्रकाशनशीलः।

महाभारते,—

पण्यानां शोभनं पण्यं कृषीणां सिध्यतां कृषिः।
बहुकारञ्च शस्यानां वाह्येऽवाह्यं यथा गवाम्॥

सम्पन्नं भोजने ब्रूयात् पानीये तर्पणं तथा ।
अमृतं पायसे ब्रूयात् यवाग्वां कृसरे तथा ॥
श्मश्रुकर्म्मणि सम्प्राप्ते व्रते स्नाने च भोजने ।
व्याधितानाञ्च सर्व्वेषामायुष्यमभिनन्दनम् ॥
महात्मनाञ्च गुह्यानि न वक्तव्यानि कर्हिचित् ।
लङ्कारं नामधेयञ्च ज्येष्ठानां परिवर्ज्जयेत् ॥
अधराणां समानानामुभयेषां न दुष्यति ।

पण्यानामिति पण्यानां कृते शोभनं पण्यमिति बह्वकारञ्च अन्नानामिति भोजने भोजनसाधने भक्ष्यादौ सम्पन्नमिति ब्रूयात् । पानीये पातव्ये दुग्धादौ तर्पणमिति, व्याधितानां रोगिणां कृते आयुष्यमभिनन्दनमिति ब्रूयात् । अधराणां वयोगुणादिभिरेवं समानानामपि ॥

विष्णुः,—

न विगृह्य कथां कुर्य्यात् ।

विगृह्य आक्षिप्य विवादकारणं विनेति पारिजातः ।

यमः,—

अनिन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः ।
पृथिवीं यतिनामानि यो निन्दति स निन्दितः ॥

हारीतः,—

न देव गो गुरु ब्राह्मणपरीवादं कुर्य्यात् । न चैषां दीयमानमपि वारयेत् ॥

चाण्डाल-शपथे ब्रह्मपुराणे,—

पूर्व्वभुक्तां स्त्रियं यस्तु निन्देत् सर्व्वाङ्गसुन्दरीम् ।
[1][तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥]
भुक्त्वा पश्येति चान्नानि यस्तु निन्दति निर्गुणः ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
श्रुत्वा परस्य वाक्यानि भवेद्यन्मन्त्रभेदनम् ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
विद्यां गृह्य यथान्यायं निन्दते च पुनर्गुरुम् ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
यस्तु निन्दति राजानं ब्राह्मणं यस्तु निन्दति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥

ब्रह्माण्डपुराणे,—

मा सम देहीति चैवं यः प्रब्रवीति दुरात्मवान् ।
अपि जातिशतं गत्वा न स मुच्येत किल्विषात् ॥

विष्णुः,—

देव-ब्राह्मण-महात्मनां परीवादं परिहरेत् ।
[शास्त्रं विद्यास्थानमिति लक्ष्मीधरः]

मार्कण्डेयपुराणे,—

वेद-देव-द्विजातीनां साधु-सत्य-महात्मनाम् ।
गुरोः पतिव्रतानाञ्च तथा यज्वि-तपस्विनाम् ॥

---

१ क्वचित् [ ] चिह्नितांशोऽधिकः ।

परीवादं न कुर्व्वीत परिहासेऽपि पुत्रक।
कुर्व्वतामविनीतानां न श्रोतव्यं कथञ्चन॥

महाभारते,—

सदा नारायणन्देवं सर्व्वपापहरं प्रभुम्।
निन्दमानो नरः शीघ्रं नरकेषूपपद्यते॥

वराहपुराणे,—

विष्णु-रुद्रान्तरं ब्रूयात् लक्ष्मी[१] गौर्य्यन्तरन्तथा।
तन्नास्तिकानां मर्त्यानां काव्यं शास्त्रविगर्हितम्॥

अन्तरं भेदं, काव्यं कल्पितं न प्रमाणमित्यर्थः।

यमः,—

यस्तु निन्द्यात् परं जीवन् प्रशंसत्यात्मनो गुणान्[२]।
स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः॥

तथा,—

परोक्षाणि परेषाञ्च परीवादञ्च वर्ज्जयेत्।
नैवं ब्रूयान्न शृणुयात् दुष्टवाक्यं कथञ्चन॥
ब्राह्मणानां विशेषेण कदाचिदपि केनचित्।
दुष्टवाक्यं न वक्तव्यं ब्राह्मणानां कदाचन॥
तुष्णीमासीत निन्दायां न ब्रूयात् किञ्चिदुत्तरम्।
ब्राह्मणानां परीवादं न कुर्य्यान्नैव कारयेत्॥
यद्ब्राह्मणेषु कुशलं तदेवाशु समाचरेत्।
ब्राह्मणानां परीवादो निन्दा यत्र प्रवर्त्तते॥

---

१ क्वचित् परीहासश्च। २ (ग) यत्र —।

नृप-बन्धु-गुर्व्वमात्य-भिषक्-ज्योतिः पुरोहितैः ।
विरोधात् सुमहद्दुःखं प्रीत्या सुखमवाप्नुते ॥

बन्ध्वादयो नृपसम्बन्धिनः । ज्योतिरिह ज्यौतिषिकः ।

तथा च,—

न च वाचं वदेद्दुष्टां न च दीनां न कर्क्कशाम् ।

विष्णुपुराणे,—

ग्रामं नयति यः क्रुद्धान् सर्व्वबन्धुरमत्सरी ।
भीताश्वासनकृत् साधुः स्वर्गस्तस्याल्पकं फलम् ॥

ग्राममुपशान्तिम् ।

मत्स्यपुराणे,—

कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रभृत् (धृक्) ।
योऽस्य सङ्कीर्त्तयेन्नाम कल्य उत्थाय मानवः ॥
न तस्य वित्तनाशः स्यान्नष्टञ्च लभते पुनः ।

स्कन्दपुराणे,— नन्दिनं प्रति महेश्वरः ।

अनामयश्चेतनावान्नामकीर्त्तयिता तव ।
सोऽश्वमेधफलञ्चैव लप्स्यते नाऽत्र संशयः ॥

पापदोषा इत्यनुवृत्तौ देवलः,—

तत्र परुषवचनमपवादः पैशून्यमनृतं वृथालापो नैष्ठुर्य्यमिति वाङ्मयाः षट् । परेषां देश जाति कुल विद्या शिल्प रूप-वृत्ताचारपरिच्छेद शरीरकर्म्माजीवानां यत्प्रत्यक्षं दोषवचनं तत् परुषम् ।

यच्चान्यत् क्रोध-सन्ताप-त्रास-संजननं वचः।
परुषन्तच्च विज्ञेयं तथान्यच्च तथाविधम्॥
"चतुष्मानिति लुप्ताचं चाण्डालं ब्राह्मणेति च॥
प्रशंसा निन्दनं द्वेषात् परुषान्तद्दिशिष्यते।
वृषलं वृषलेत्युक्ता पतितं पतितेति च॥
सत्येनापि च दोषः स्यान्मिथ्या द्विगुणभाग्भवेत्।

तेषामेव परुषवचनानां परोचमुदाहरणमपवादः। गुरु-नृपतिबन्धुसकाशेषु अर्थोपघातार्थं दोषाख्यानं पैशून्यम्। अनृतं विविधमर्थवादश्चेति।

तथा,—

देशे राजप्रवादाच्च परार्थपरिकल्पनात्।
नर्महासप्रसङ्गाच्च विज्ञेयं व्यर्थभाषणम्॥
गुह्याङ्गाऽमेध्यसंज्ञानां वचनं निष्ठुरं विदुः।
यदन्यद्वा वचो नीचं स्त्रीपुंसोर्मिथुनाश्रितम्॥
इत्येवं यदि (?) कल्पस्य दुष्टवाक्यस्य भाषणात्।
इह चामुत्र च क्रूरमनर्थमधिगच्छति॥
हिताहितं मनुष्याणां केवलं वचसि स्थितम्।
तस्मात् संयोजयेद्वाचमप्रमत्तः परीक्ष्य च॥
दुश्चिकित्स्यतमं पश्चादुरुक्तं हि वचो भवेत्।
चिप्रं विनिपतेच्चापि वचनं दोषसंस्थितम्॥

वृत्तं शीलं, आचारो नित्यनैमित्तिकानुष्ठानं, आजीवो जीविका।

यमः,—

पापं पापस्त्वमित्युक्त्वा चौरं चौरेति वा द्विजः
वचनात्तत्स्यदोषः स्यान्मिथ्याद्विर्दोषतां व्रजेत् ॥
प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति ।
प्रत्यादेशो न कर्त्तव्यो रक्षेदात्मानमात्मना ॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् ।
तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् ॥

याज्ञवल्क्यः,—

मिथ्याभिशंसिनो दोषो द्विःसमो भूतवादिनः ।
मिथ्याभिशस्तदोषञ्च समादत्ते मृषां वदन् ॥

शातातपः,—

स्नातस्तु वरुणस्तेजो जुह्वतोऽग्निः श्रियं व्रजेत् ।
भुञ्जानस्तु यमस्त्वायुस्तस्मान्न व्याहरेत्त्रिषु ॥
स्नातः स्नानं कुर्व्वतः, न व्याहरेत् न भाषेत ॥

॥ इति गृहस्थरत्नाकरे वाच्यावाच्यतरङ्गः ॥

## अथ गमन-प्रवेशनविधिः ।

तत्र मनुः,—

नाविनीतैर्व्रजेद् धूर्य्यैर्न चक्षुर्व्याधिपीड़ितैः ।
न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥
विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः ।
वर्णरूपोपसम्पन्नैः प्रतोदेनातुदन् भृशम् ॥
नातिकल्यं नातिसायं नातिमध्यन्दिने स्थितम् ।
नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह ॥

अविनीतैर्दोषवद्भिरशिक्षितैरिति पारिजातः। धूर्य्यैः पूर्व्वगृहीतैः, वालधिविरूपितैः छिन्नपुच्छैर्लक्षणान्वितैः प्रशस्तावर्त्तादियुतैः, वर्णः श्वेतशोणादिः, रूपं संस्थानविशेषः, प्रतोदनेन प्राजननेनातिमध्यन्दिने द्ःमहादित्ये ।

तथा,—

गवां यानस्य पृष्ठेन सर्व्वत्रैव विगर्हितम् ।

विष्णुः,—

नैकोऽध्वानं प्रपद्येत नाधार्म्मिकैः सार्द्धं न वृषलैः न विद्विड्भिः नातिप्रत्युषसि नातिसायं न सन्ध्ययोः । न मध्याह्ने नासन्निहितपानीयं नातितूर्णं न सततम् । न व्यालव्याधिताऽशस्तैः गोभिर्वा नादान्तैः ।

असन्निहितपानीयमिति क्रियाविशेषणं सततमविश्रान्तं, व्यालः क्रूरः । अशस्तैरप्रशस्तैर्व्वृषच्छादिभिरिति यावत्। अदान्तैरक्षतैः ।

हारीतः,—

पूर्व्ववृत्तिषु वृत्त्यर्थं नासूर्य्यमध्वानं गच्छेत् । न नियमवेलायां नानुदको नायज्ञोपवीती न वृषलैः सह ।

पूर्व्ववृत्तिषु सतीषु असूर्य्यं रात्रावित्यर्थः । नियमवेला नित्यकर्म्मकालः ।

विष्णुपुराणे,—

वर्षातपादिषु च्छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥
न चोर्द्धं तिर्य्यग् दूरं वा निरीक्षन् पर्य्यटेद्बुधः ।
युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् ॥

तथा,—

न दुष्टयानमारोहेत् । न कूलच्छायाः संश्रयेत् ।
नैकः शून्याटवीं गच्छेन्न तु शून्यगृहं वसेत् ॥

देवीपुराणे,—

नासहायो व्रजेद्रात्रौ नोत्पथे न चतुष्पथे ।

स्कन्दपुराणे,—

सोमनन्दीति यः प्रोक्त्वा कान्तारं प्रतिपद्यते ।
न तस्य द्वीपि-शार्दूल-सिंहाः कुर्य्युर्भयं क्वचित् ॥

जाबालः,— नैकोऽध्वानं प्रपद्येत
न रात्रौ नाऽरिणा सह ।
न महावृक्षमारोहे-
न्न बाहुभ्यां नदीन्तरेत् ॥

बौधायनः,—

नैकोऽध्वानं व्रजेन्न पतितैर्न स्त्रिया न शूद्रेण। न प्रतिषायं व्रजेत्।

पैठीनसिः— न गो-ब्राह्मणाग्नीनामन्तरेणोपेयात्।

वशिष्ठः,—

नाग्निं ब्राह्मणञ्चान्तरेण व्यपेयात्। नाग्न्योर्न ब्राह्मणयोरनुज्ञाप्य वा।

बौधायनः,—

पुरद्वारेन्द्रकील परिघान्तरेण नाभीयात्।

प्रेषयोरन्तरेण न गच्छेत्। वत्सतन्त्रीं नो परिगच्छेत्। इन्द्रकील इन्द्रयष्टिः। परिघो मुद्गरः। प्रेषा हिन्दोला, वत्सतन्त्री अत्र वत्सबन्धनार्थं दाममाला। नाभीयात् नाभिमुखं गच्छेत्।

आपस्तम्बः,—

गार्द्दभं यानमारोहणं विषमारोहणावरोहणानि च वर्ज्जयेत्। बाहुभ्यां न नदीतरं नावञ्च सांशयिकीम्।

आरोहणे कार्य्य इति शेषः। तरं तरणं, सांशयिकी यस्यामारोहणेऽनिष्टस्योत्कटाशङ्का सा।

विष्णुः,—

न प्रवर्षति धावेत। न वृथा नदीन्तरेत्। न देवताभ्यः पितृभ्यश्च उदकमप्रदाय च। बाहुभ्यां भिन्नया नावा वा।

न तरेदिति प्रत्येकमनुषज्यते॥

याज्ञवल्क्यः,—

अयमेव वज्र इत्येवं मन्त्रं कृत्स्नमुदाहरेत्।

वर्षत्यप्रावृतो गच्छेत् पुष्यात् प्रत्यक्छिवा नरा ॥

स्वयमेव वज्रः सर्व्वं पाप्मानमपहन्ति इति सर्व्वं मन्त्रं पठन् वर्षत्यप्रावृतो गच्छेत् यावन्मन्त्रसमाप्तिः, ऊर्द्ध्वमनियमः । तावतैवातिपाप्मनोपहतत्वादिति विश्वरूपाचार्य्यः ।

आपस्तम्बः,—

अभिमुखमग्निमाह्रियमाणं प्रतिष्ठितं भूमौ नाप्रदक्षिणीकृत्योपेयात् ।

भूमौ प्रतिष्ठितमग्निं प्रदक्षिणीकृत्यैव गच्छेदित्यर्थः ।

तथा,—

मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्व्वीत प्रज्ञातांश्च वनस्पतीन् ॥

प्रदक्षिणानि स्वशरीरापेक्षया दक्षिणपार्श्ववर्त्तीनि । प्रज्ञातान् प्रसिद्धान् वनस्पतीन् विना पुष्पं फलिनोऽश्वत्थादीन् ।

मार्कण्डेयपुराणे,—

विद्याऽधिकं गुरुञ्चैव द्विजं कुर्य्यात् प्रदक्षिणम् ।

प्रदक्षिणीकुर्य्यादित्यनुवृत्तौ विष्णुः,—

अग्नि-ब्राह्मण-गणिका-पूर्णकुम्भादर्श-च्छत्र-ध्वज-पताका-श्रीवृक्ष-वर्द्धमान-नन्द्यावर्त्तान् तालवृन्त-चामर-गजाज-गो-दधि-क्षीर-घृत-मधु-सिद्धार्थकांश्च वीणाचन्दनायुधार्द्रगोमयफलपुष्पार्द्रशाक-रोचनादूर्व्वाप्ररोहान् । उष्णीषालङ्कार-मणि-कनक-रजत-वस्त्रासन-यानामिषाणि च शृङ्गारोद्धृतोर्व्वीवद्धैकपशुकुमारीमीनांश्च

श्रीवृक्ष-वर्द्धमान-नन्द्यावर्त्ताः सुवर्णदार्व्वादिनिर्म्मिताः छत्र

रत्नाकरादावस्माभिरुक्ताः ज्योतिःशास्त्रप्रसिद्धाः। औदृशो वृत्तलु इति पारिजातः। शृङ्गारः सुवर्णकरकः। अलङ्कारो मुकुटम्"।

मत्स्यपुराणे,—

अथेष्टानि प्रवक्ष्यामि माङ्गल्यानि यथाऽनघ।
श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भस्तथैव च॥
[1]जलजानि च पुष्पाणि मांसमत्स्याश्च पार्थिव।
गावस्तुरङ्गमा नागा बद्ध एकः पशुस्त्वजः॥
त्रिदशाः सुहृदो विप्राः ज्वालितश्च हुताशनः।
गणिका च महाभाग दूर्वा चार्द्रञ्च गोमयम्॥
रुक्मं रौप्यं तथा ताम्रं सर्व्वरत्नानि वाप्यथ।
औषधानि च सर्व्वत्र यवाः सिद्धार्थकास्तथा॥
नृवाह्यमानं यानञ्च भद्रपीठन्तथैव च।
खड्गं छत्रं पताकाश्च मृदश्चायुधमेव च॥
राजलिङ्गानि सर्व्वाणि शवं रुदितवर्ज्जितम्।
घृतं दधि पयश्चैव फलानि विविधानि च॥
स्वस्तिकं वर्द्धमानञ्च नन्द्यावर्त्तं स कौस्तुभम्।
मत्स्यश्चित्रविन्यस्ता माङ्गल्यान्यपराणि च॥
अक्षताः श्वेतमुख्याश्च तथा दर्पणमेव च।
अञ्जनं रोचना चैव भृङ्गारो मक्षिकास्तथा॥
वादित्राणां सुखः शब्दो गम्भीरश्च मनोरमः।

[1] क्वचित् पुस्तके जलजाः पक्षिणश्चैवं।

गान्धार षड्ज ऋषभा ये च शस्तास्तथा स्वराः ॥

मेघाः शस्ता घनाः स्निग्धा गजवृंहितनिस्वनाः ।

अनुलोमा तड़ित् शस्ता शक्रचापस्तथैव च ॥

अनुलोमा ग्रहाः शस्ता दिक्पतिस्तु[1] विशेषतः ।

आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम् ॥

शस्तान्येतानि सर्व्वज्ञ यच्च स्यान्मनसः प्रियम् ।

मनसस्तुष्टिरेवात्र परमं जयकारणम् ॥

एकतः सर्व्वलिङ्गानि मनसस्तुष्टिरेकतः ॥

यानोत्सुकत्वं मनसः प्रकर्षः

शुभस्य लाभो विजयप्रवादः ।

माङ्गल्यलाभश्रवणञ्च राजन्

ज्ञेयानि नित्यं विजयावहानि ॥

नृवाह्यमानं यानमिह नरेप्सितं यानं भद्रपीठः। स्वस्तिक-कौस्तुभाः स्वस्ववर्णादिघटिताः सन्निवेशविशेषाः । अनुलोमाः पृष्ठस्थाः । दिक्पतयः—

रविः शुक्रो महीसुनुः स्वर्भानुर्भानुजो विधुः ।

बुधो वृहस्पतिश्चैव दिशामीशास्तथा ग्रहाः ॥

इति वाक्यबोधिता बोध्याः । अस्त्रं शरादि वेध्यमायुधं तदन्यत् । तथापि खड्गस्य पुनरुपादानं मङ्गलातिशयत्वबोधाय ।

विष्णुः,—

अथ मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत । वान्त-विविक्त-मुण्ड-

[1] (ग) वाक्पतिश्च ।

जटिल-वामनांश्च। काषायि-प्रव्रजित-मलिनांश्च। तैल-गुड़-शुष्क-गोमयेन्धनतृणपर्णभस्माङ्गारकांश्च। लवणक्लीवासव-नपुंसक-कार्पासरज्जुनिगड़मुक्तकेशांश्च।

क्लीवः स्त्रीपुंसव्यञ्जनवानपि रेतःशून्यः। आसवः सन्धानकः। नपुंसकः स्त्रीपुंसव्यञ्जनरहितः।

मत्स्यपुराणे,—

औषधानि च युक्तानि धान्यं कृष्णञ्च यद्भवेत्।
कार्पासञ्च तृणं शुष्कं गोमयेन्धनमेव च॥
इन्धनञ्च तथाङ्गारलगुड़ाश्च तथाऽशुभाः।
अभ्यक्तं मलिनं मुण्डं तथा नग्नञ्च मानवम्॥
मुक्तकेशं नरार्त्तञ्च[१] काषायाम्बरधारिणम्।
उन्मत्तकं तथा षण्ड[२] दीनञ्चाथ नपुंसकम्॥
अन्धः पङ्गुस्तथाचर्म्मकेश बन्धनमेव च।
तथैवोद्धृतसाराणि पिण्याकादीनि यानि च।
चाण्डालाः श्वपचाश्चैव राजबन्धनपालकाः।
वधकाः पापकर्म्माणो गर्भिणी स्त्री तथैव च॥
तुष-भस्म-कपालास्थि भिन्नभाण्डानि यानि च।
रिक्तानि चैव भाण्डानि मृतं मारक्षमेव च॥
एवमादीनि चान्यानि न शस्तान्यपि दर्शने।
अशस्तो वाद्यशब्दश्च भिन्नभैरवझर्झरः॥
एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः।

१ (क) ज्वरार्त्तञ्च। २ (क) तथासत्वं।

गच्छेति पश्चाद्धर्मश्च पुरस्ताच्च विगर्हितः ॥
क यासि तिष्ठ मा गच्छ किन्ते तत्र गतस्य तु ।
अन्ये शब्दाश्च येऽनिष्टाः ते विपत्तिकराः पथि ॥
ध्वजादिषु तथा स्थानं क्रव्यादानां विगर्हितम् ।
स्खलनं वाहनानाञ्च वस्त्रभङ्गस्तथैव च ॥
निर्गतस्य च द्वारादौ शिरसश्चाभिघातिता ।
छत्रध्वजानां शस्त्राणां पतनञ्च तथाऽशुभम् ॥
वायुः शर्क्करो रूक्षः सर्व्वदिग्भ्यः समुत्थितः ।
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विजः ॥
अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः ।
रूक्षा रूक्षखराश्चण्डाः क्रव्यादाश्च विगर्हिताः ।
अप्रशस्ते तथा ज्ञेये परिवेष-प्रवर्षणे ॥

औषधानि च युक्तानि परस्परममङ्गानि दर्शमूलीप्रभृतीनि । कृष्णधान्यं कालिङ्गादि (?) गोमयेन्धनं शुष्कगोमयम् । द्वितीय-मिन्धनपदं तदितरेन्धनपरं, बन्धनं निगड़ादि, क्रव्यादा गृध्रादयः।

दृष्टे निमित्ते प्रथममभङ्गल्यविनाशनम् ।
शङ्करं पूजयेद्विद्वान् तथैव मधुसूदनम् ।
द्वितीये च तथा दृष्टे प्रतीपे प्रविशेद्गृहम् ॥

मनुः,—

यज्ञं गच्छेच्च चावृत्तः ।

नमस्कर्त्तुं व्रजेत् कामं दिदृक्षुर्यज्ञकर्म्म च ।
कुलात्कुलं रहस्यार्थी सुसरेच्चानिमित्ततः ॥

अवृत्तोऽनाहूतः। कुलात्कुलं गृहाद्गृहं रहस्यं गोप्यम्। अनिमित्ततः प्रयोजनं विना।

शङ्खलिखितौ,—

न वधबन्धनसमवायं गच्छेत्। न दावं न वनस्पत्योरन्तरम्। न स्रवन्तीनां प्रभवम्। न स्रवन्तीनां वधबन्धनसमवाये।

वधबन्धनार्थो जनसमूहः। दावो वह्निः तत् समीपं न गच्छेत्। प्रभव उत्पत्तिस्थानं कलापग्रामादिकमिति माधवस्वामी।

मनुः,—

अद्वारेण तु नातीयात् ग्रामं वा वेश्म वावृतम्।
रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत॥

शङ्खलिखितौ,—

न रात्रौ विचरेत्।

आपस्तम्बः,—

न कुसृत्या ग्रामं गच्छेत्। यदि प्रविशेत् नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेत्। अन्यां वा रौद्रीम्।

कुसृतिः कुमार्गः।

शङ्खलिखितौ,—

न वाह्यैरभुक्तैरपीतपानीयं पिवेत्। न ग्राममदत्त्वाऽश्नीयात्।

एकसार्थप्रयातं ये निस्वमन्नार्थिनं नरम्।
अपास्य स्वाश्रमश्नन्ति न इमे स्वर्गभोजनाः॥

देवलः,—

स्नावांसे भोजने चैव न त्यजेत् सहयायिनम् ।
देवांद्रपानृपौंश्चैव आसप्तमपदं व्रजेत् ॥

दक्षपुत्राणां भ्रात्रन्वेषणे प्रवृत्तानामनिवृत्तिमभिधाय—

विष्णुपुराणे,—

ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे द्विजः ।
प्रयातो नश्यति तथा तन्न कार्य्यं विजानता ॥

॥ इति गृहस्थरत्नाकरे गमन-प्रवेशनतरङ्गः ॥

---

## अथानाक्रमणीयानधिष्ठेयानि ।

तत्र मनुः,—

देवतानां गुरोः प्राज्ञः[१] स्नातकाचार्य्ययोस्तथा ।
नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च ॥
स्नान्तु नाक्रामयेच्छायां क्लीवेन पतितेन च ।
चण्डालेन भिषग्भिश्च नित्यरोगान्वितेन च ॥

गुरुरिह पित्रादिः, आचार्य्यस्य पृथगुपादानात् । प्राज्ञः प्रशस्तमतिः । कामतो बुद्धिपूर्व्वकम् ।

१ राज्ञ इति क्वचित् पाठः ।

याज्ञवल्क्यः,—

देवर्त्विक्स्नातकाचार्य्य-राज्ञां छायां परस्त्रियाः।

नाक्रमेद्रक्त-विण्मूत्र-ष्ठीवनोद्वर्त्तनानि च॥

मनुः,—

मध्यन्दिनेऽर्द्धरात्रन्तु श्राद्धं भुक्त्वा तु सामिषम्।

सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम्॥

उद्वर्त्तनमपस्नानं विण्मूत्रं रक्तमेव च।

श्लेष्म-निष्ठ्यूत-वान्तानि नाधितिष्ठेत कामतः॥

वैरिणं नैव सेवेत सहायं नैव वैरिणः।

अधार्म्मिकं तस्करञ्च परस्यैव च योषितम्॥

उद्वर्त्तनं कृतमलापकर्षणं यवचूर्णादि। अपस्नानं कृतस्नानोपयोगजलं निष्ठ्यूतमुद्गीर्णताम्बूलादि।

तथा,—

अधितिष्ठेन्न केशानि भस्मास्थिक-कपालिकाः।

न कार्पासास्थि न तुषान् दीर्घमायुर्जिजीविषुः॥

कपालिकाः मृण्मयभाण्डखण्डाः। कार्पासास्थि कार्पासबीजम्।

शङ्खलिखितौ,—

नोद्धत-कुहकैस्सह एकत्र तिष्ठेत्।

उद्धतोऽविनीतः। कुहको वशीकरणादिनिष्ठः।

हारीतः,—आचमनापमार्ज्जनापस्नान-तुष-भस्मास्थि-कपालिकैः सह्यत्नाधितिष्ठेत।

आचमनं शौचादिभाण्डं अपमार्ज्जनं मार्ज्जनोपयुक्त-कुशादि, कपालं खर्परम् ।

शङ्खलिखितौ,-

नाहेः कुलमधितिष्ठेत् । न तुष-कपाल-भस्म-केशास्थि-तृण संकार कूटेषु तिष्ठेत् ।

संकार अवकरः ।

मार्कण्डेयपुराणे,—

नाधितिष्ठेत् शकृन्मूत्र केश-भस्म-कपालिकाः ।
तुषाङ्गारास्थि शीर्णानि रज्जु-वस्त्रादिकानि च ॥
नाधितिष्ठेत्तथा प्राज्ञः पथि पद्मानि वा भुवि ।

आपस्तम्बः,—

पाणिममूहनं ब्राह्मणस्य नाप्रोक्षितमधितिष्ठेत् । न भूमावनन्तरितायामासीत ।

विष्णुपुराणे,—

चतुष्पथश्चैत्यतरुः श्मशानोपवनानि च ।
दुष्टस्त्रीसन्निकर्षश्च वर्ज्ज्यानि निशि सर्व्वथा ॥
पूज्यदेव-पूजकयोश्छायां नातिक्रमेद्बुधः ।
केशास्थिकरकामेध्य बलि-भस्म-तुषांस्तथा ॥
स्नानार्द्रां धरणीञ्चैव यत्नेन परिवर्ज्जयेत् ।
श्लेष्म-विण्मूत्र-रक्तानि सर्व्वदैव न लङ्घयेत् ॥

देवीपुराणे,—

भ्याशये तिष्ठेन्न च पर्व्वतमस्तके ।

न श्मशाने न देवानां प्रासादेषु कथञ्चन ॥
न चैव गोः प्रसूताया विश्वसेत् स्त्रीजनेषु च।
न मुखेन धमेदग्निं न तु खड्गन्तु लङ्घयेत् ॥
तथा चैवायुधान् सर्व्वान् यन्त्रोपस्करमार्ज्जनीः।
न प्रमत्तजनाकीर्णे न स्त्री-बालकसेविते।
गृहे वा गमनं कुर्य्यात् विश्वासे क्रीड़नानि च ॥

मार्कण्डेयपुराणे,—

नोत्कृष्टशय्यासनयोर्न-निकृष्टस्य चावहेत्।

तथा,—

नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत् कदाचन।
न चालपेज्जनद्विष्टां [१]वीरहीनां न च स्त्रियम् ॥

॥ इति गृहस्थरत्नाकरेऽनाक्रमणीयानधिष्ठेयादितरङ्गः ॥

---

१ (क) पुस्तके वीरहीनां यथा स्त्रियम्।

## अथानवलोकनीयानि।

तत्र विष्णुः—

नादित्यमुद्यन्तं वीक्षेत नास्तं यान्तं नोपरक्तं न वाससा तिरोहितं न चादर्शदर्शनाद्युपगतं न मध्याह्ने।

उपरक्तो राहुग्रस्तः।

शङ्खलिखितौ,—

नोद्यन्तमादित्यं वीक्षेत। नास्तं यान्तमाप्यायनञ्च तस्मै विधिवद्विदधीत।

आप्यायनमिहार्घादिना पूजनं तस्मै आदित्याय विधिवत् यथाशास्त्रम्॥

हारीतः—

न नग्नां स्त्रियं पुरुषं वा ईक्षेत नोदयास्तमयौ चन्द्रमार्कौ।

याज्ञवल्क्यः,—

नेक्षेतार्कं न नग्नां स्त्रीं न संसृष्टमैथुनाम्।
न च मूत्रं पुरीषं वा नाशुची राहु-तारकाः॥

देवलः,—

सूर्य्याचन्द्रमसौ चेतौ नक्षत्राणि च सर्व्वतः।
नोदीक्षेताशुचिर्नित्यं ग्रहानन्यांश्च मानवः॥
पतित-व्यङ्गचाण्डालोच्छिष्टाद्यान्नावलोकयेत्।
अन्यदृष्टिगतैरेतैस्सम्भाषेत नृणाम्बुधः[१]॥

विष्णुपुराणे,—

ज्योतिरमेध्यामक्तानि नाभिवीक्षेत च प्रभो।

१ (ग) वरः।

तथा,—

संवत्सरं क्रियाहानिर्यस्य पुंसोऽभिजायते ।
तस्याऽभिलोकनात् सूर्य्यो निरीक्ष्यस्साधुभिः सदा ॥

मार्कण्डेयपुराणे,—

देवता पितृ-सच्छास्त्र यज्ञ-मन्ध्यादिनिन्दकैः ।
कृत्वा तु स्पर्शनालापं शुद्ध्येतार्कावलोकनात् ॥
अवलोक्य तथोदक्यामन्त्यजं पतितं शवम् ।
विधर्म्मि-सूतिका-षण्ड विवस्त्रान्त्यावसायिनम् ॥
मृतनिर्य्यातकाश्चैव परदाररताश्च ये ।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ॥

एतानवलोक्येत्यन्वयः ।

कृतघ्नं मानवं दृष्ट्वा नरकेष्वपि कुत्सितम् ।
शुद्ध्यर्थं देवि द्रष्टव्याः सोमानलदिवाकराः ॥

सोमादीनां यथासम्भवं विकल्पः ।

हारीतः,—

अवगुण्ठित उच्छिष्टोऽमेध्यान्तरो नाभिभाषेत ।
नोर्द्ध्वं ज्योतींषि वीक्षेत न देवान् न वमस्वतीम् ॥

अवगुण्ठित इहावगुण्ठितशिराः । अमेध्यान्तरोऽमेध्यदेश-स्थितः । नोर्द्ध्वमिति ऊर्द्ध्वपदावस्थितस्य ज्योतिर्दर्शने निषेधः ।

शङ्खलिखितौ,—

न स्त्रियं विवस्त्रां न पुरुषमन्यत्र स्वाभाव्यात् ।

स्वाभाव्यमत्र बाल्ये परिधानानभिज्ञता ।

गौतमः,—

न नग्नां परयोषितमीक्षेत, न नग्नां स्त्रियमीक्षेत अन्यत्र-मैथुनात् । अनाप्तमकार्यकारिणम् । अनाप्तं वैरिणं अकार्य्यकारिणं नेक्षेदित्यनुषङ्गः ।

नेक्षेतेत्यनुवृत्तौ विष्णुः—

न क्रुद्धस्य गुरोर्मुखं, न तैलोदकयोः स्वां छायां, न मलवत्या-दर्शं, न पत्नीं भोजनसमये, न स्त्रियं नग्नां न कथञ्चन मेहमान न चालानभ्रष्टं कुञ्जरं न चापि विषमस्थो वृषादियुद्धं नोन्मत्तं न मत्तं तथा न कूपमधितिष्ठेत न कूपमवलोकयेत् ।

शङ्खलिखितौ,—

तथा न कूप—स्वभ्राण्यवलोकयेत् ।

मनुः,

'न विण्मूत्रमुदीक्षेत ।

तथा,—

नाश्नीयाद् भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवतीं जृम्भमाणां वा न चासीनां यथासुखम् ॥
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तां मलावृताम् ।
न पश्येत् प्रसवन्तीञ्च तेजस्कामो द्विजोत्तमः ॥

॥ इति गृहस्थरत्नाकरेऽनवलोकनीयतरङ्गः ॥

———

# अथ शूद्राप्रदेयानि ।

तत्र मनुः,—

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्म्मं न चास्य व्रतमादिशेत् ॥
यो ह्यस्य हि धर्म्ममाचष्टे यश्चैवादिशति व्रतम् ।
सोऽसंवृतं नाम तमस्तेनैव सह गच्छति ॥

मतिं दैवविषयां अदृष्टार्थकार्य्यविषयमिति कल्पतरुः । उच्छिष्टं भक्तशेषविषयम् । अयञ्चोच्छिष्टदानप्रतिषेधोऽनाश्रितशूद्रविषयः । आश्रितं प्रति—

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।

इति मनुवचनात् ।

इतरे तु प्रतिषेधाः सङ्कोचाभावानुरोधेनान्यशूद्रविषया अपि । अत्र वर्णधर्म्मोपदेशस्य तु लोभादिनाऽतिक्रान्तप्रतिषेधेनैव करणोपपत्तेर्न तद्विधानापेक्षा इति कल्पतरुः ।

हविष्कृतं हविष्ट्वेन कल्पितं पुरोडाशादि । धर्म्मः पञ्चयज्ञादि । व्रतं प्राजापत्यादि ।

यमः,—

वृषलाध्यापको यस्तु वृषलाध्यापितश्च यः ।
तावुभौ नरके मग्नौ वसेतां शरदां शतम् ॥

विष्णुः,—

न शूद्राय मतिं दद्यान्नोच्छिष्टं हविषं तिलान् ।
न चास्योपदिशेद्धर्म्मं न चास्य नैव च व्रतम् ॥

शङ्खलिखितौ,—

कृशरपायसापूपमांस-दधि-मधु-घृत-कृष्णाजिनानि न शूद्रेभ्यो दद्यात्। नचोच्छिष्टं न हविष्कृतम्। नोपकृतं किञ्चिदन्यत्रा-प्रकृतात्।

प्रकृतमित्यौत्सत्रात्मकम्।

आपस्तम्बः,—

नाब्राह्मणायोच्छिष्टं प्रयच्छेत्। यदि प्रयच्छेत् दन्तान् कृत्वा तस्मिन्नवधाय प्रयच्छेत्।

'अब्राह्मणोऽत्र शूद्रः, कृत्वा विलिख्य, तस्मिन् उच्छिष्टे अवधाय निःक्षिप्य दन्तमलानिति शेषः॥

॥ इति गृहस्थरत्नाकरे शूद्राप्रदेयातरङ्गः॥

———

## अथ क्रोधादीनां परिमार्ज्जनम्।

आपस्तम्बः,—

क्रोधादींश्च भूतदाहीयान् परिवर्ज्जयेत्।

भूतस्य शरीरस्य दाहीयान् दाहकारकान्॥

तथा,— अथ भूतदाहीयान् दोषानुदाहरिष्यामः।

क्रोधो हर्षो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याश-परीवादावसूयाकाममन्यू अनात्म्यमयोगः।

अत्याशो बहुतरभक्षणं मन्युः पराभिभवोत्थदोषानुवृत्तिः अनात्म्यमचावशित्वम्। अयोगो अनुयोगो वृथाभियोग इति यावत्।

हारीतः,—

औदर-रेतस-कामज-क्रोधज-हर्षजानग्नीन् यथावन्नियच्छेत। औदराः सर्व्वकर्म्मेन्द्रियभावदोषाः सम्भवन्ति यैरुपसृष्टो विविध-सन्तापमुपैति तस्मात् शुचिर्यथा परिमिताहारः स्यात्। आहार-शुद्धौ सत्त्वशुद्धिरित्याचार्य्याः। लोकद्वयसन्तापकत्वादग्नित्वमेतेषाम्। नियच्छेत् शमयेत्।

तथा,—

पुंयोगात् साहसं रेतस्यबीजं तदनृतावुत्सर्गदोषः स्यादृतौ चोत्सर्गे तद्ब्रह्मचर्य्येण व्याख्यातम्। देवादिप्रवृत्तत्वाज्जगतः प्रथमं द्वितीयं यज्ञनियमार्थं, तृतीयं मोक्षसिद्ध्यर्थं, सङ्कल्पात् कामः सम्भवत्याशयात् प्रवर्त्तते स्वेहान्निवर्त्तते। स चेच्छालक्षणो-ऽनेकविधः कामो येनाभिभूतोऽष्टस एव कामानां लोके अनेक-संसारकामावर्त्ते निमज्जति स, एष अनर्थः। कामो हि

भगवान् वैश्वानर इति श्रुतिः । तस्य संकल्पनं नियमनं स व्याख्यातः । कामगीतौ चात्र श्लोकौ भवतः—

प्रवृत्तौ वा निवृत्तौ वा सर्व्वतः प्रतिभूरहम् ।
सर्व्वार्थेष्वयथार्थोऽहं मदृते न हि किञ्चन ॥
यो मां यथार्थं सर्व्वार्थे सर्व्वभूतेषु पश्यति ।
सोऽध्वनः परमाप्नोति नेतरे कामवादिनः ॥

क्रोधाग्निनाऽभिभूतः .क्लेषामप्यवक्रमतो नाभिगमनीयोऽविश्वसनीयश्च भवति । कार्य्याकार्य्य-वाच्यावाच्यानि न वितर्कयति । तत्र घोरां निरयप्रायां यातनामनुभूय क्रूर-क्रव्याद्-श्व-तिर्य्यक्-योनिषु व्रजति । तत्र सर्व्वासां प्रजानां वध्यो भवति क्रमशोऽनु मनुष्यतां प्राप्य सर्व्वजनविद्विष्टतामुपैति ।

क्रोधो हि [१]तमोरूपस्तस्य क्षमा नियमनं सा व्याख्यातेति । लोभाऽग्निनाऽभिभूतः पुण्यार्थेषूपयुज्यमानमतिक्रान्तमात्मानं मन्यते नष्टं पुत्र-दार-बन्धूनामुपयुक्तं स्वकृतं सम्बन्धिनामप्यनुपजीवनीयतमो भवति असद्दत्तानामप्यादानमिच्छति तत्रानुबन्धात् सोऽपि तिर्य्यग्योनिषु जायते । लोभो हि तमोरूपस्तस्य सन्तोषो नियमनं सोऽपि व्याख्यातः ।

एवं ह्याह,—

औदरो रैतसश्चापि कामजः क्रोधजोऽङ्गजः ।
एते वै निर्ज्जिता येन स वै पञ्चतमः स्मृतः ॥

वाचोवेगं मनसः, क्रोधवेगन्तूरःप्रस्रावेगम् ।

---

१. (ग) पुस्तके मोहरूपः ।

एतान् वेगान् धारयेद्यस्तु विप्रास्तं प्रब्रूयुर्ब्रह्मिष्ठं वा मुनिं वा। इति पौरुष्यं पुरुषव्यापारः। साहसं सहो बलं तद्भवं तस्य पुरुषस्य रेतो बीजं यतस्तस्मात् तत् पर्व्वापर्व्व-साधारणेषु दारगमनरूपं। ब्रह्मचर्य्येण पूर्व्वोक्त कृष्णाग्रवणादिभेदेन प्रथमं निषिद्धानिषिद्धसाधारणं गमनं। जगतः सर्व्वस्य तद्देशादारभ्य तिर्य्यक्पर्य्यन्तं स्वभावप्रवृत्तत्वात्। द्वितीयं पर्व्वादिवर्ज्जनरूपं यज्ञार्थं यज्ञसाङ्गतासिद्ध्यर्थं। तृतीयं ऋतुमात्रगमनं तपःसिद्ध्यर्थम्। चतुर्थमूर्द्ध्वरेतस्त्वं मोक्षार्थम्। सङ्कल्पाद्रमणीया युवतीत्यादि विज्ञानात्। कामो विषयरागः। आग्रयात् पौनपुन्येन भावनातः। स्नेहास्तथैव पक्षपातात्। अध्वन आर्त्तवादिमार्गात् परं चिपा-लक्षणम्।

विष्णुः,—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥

आश्वालः,—

त्यजेदिन्द्रियचापल्यं ब्रह्मनिन्दां तथैव च।
माया-मात्सर्य्य-लोभांश्च क्रोधवेगान् बलाय ते॥
परापवादमोहांश्च आत्मार्थे याचनां तथा।
वृथा कलहमालस्यन्दिवामैथुनमेव च॥

मनुः,— नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्।
द्वेषं दम्भञ्च मानञ्च क्रोधन्तैक्ष्ण्यञ्च वर्ज्जयेत्॥

हारीतः,—

सर्व्वभक्ष्यभोजनमभोज्यभोजनमपेयपानमयाज्ययाजनमसत्प्रति-

यश्चो परदाराभिमर्षणं. परद्रव्यहरणं परहिंसा चेति शारी-राणि । पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाच्यानि । परोपतापः पराभिद्रोहः क्रोधो-लोभो-मोहो-ऽहङ्कारश्चेति॰ एता-न्यष्टादश नैरेयाणि कर्म्माणि ।

अभोज्यः पतितादिः तदन्नभोजनं, अभोज्यभोजनं नैरेयाणि निरयहेतवः ।

तथा,—

अथातः पापदोषान् मनोवाक्-शरीरजान् व्याख्यास्यामः । तत्र लोभ-द्वेष-राग-मान-मोह-मद-शोक-ममत्वाऽहङ्कार-भय-हर्ष-मोह-चिन्ताश्चेति द्वादश मानसाः ।

तेषाञ्च त्रिविधो मोहः सम्भवः सर्व्वपाप्मनाम् ।
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् ॥
विज्ञानं सर्व्वविद्यानामर्थानां स्वयमूहनम् ।
दोषैरधर्षणञ्चेति ज्ञानमज्ञानमन्यथा ॥
अश्रेयः-श्रेयसोर्म्मध्ये भ्रमणं संशयाद्भवेत् ।
मिथ्याज्ञानमिति प्राहुरहिते हितदर्शनम् ।
भवत्यधर्म्मादज्ञानमविद्यातस्तु संशयः ।
उभाभ्यामन्यथा ज्ञानं पापिष्ठमुपजायते ॥
अज्ञानाद्दुःख-सम्प्राप्तिः संशयाद्बध्यते पुनः ।
मिथ्याज्ञानात् पतत्येव मूढो तामिस्रयोनिषु ॥
आवृता विषयाः सर्व्वे धर्म्मदोषैर्यथा तनुः ।
शृणतो हृदि ताम् हत्वा रागो रागस्य कारणम् ॥

स(स्व)सन्निकर्षादज्ञानात् सङ्कल्पादभिमानतः।
सुखाच्च जायते रागो विषयेषु शरीरिणाम्॥
ज्ञानाद्दोषादसामर्थ्यात् क्लेशादन्यप्रसङ्गतः।
वियोगात् कालतः शोकात् धर्माच्च विनिवर्त्तते॥
निवर्त्तते चेद्रागोऽयं पुंसो द्वेषादि-हेतुभिः।
भूयोऽप्युत्पद्यते सङ्गाज्ज्ञानात्रश्यति केवलम्॥
अतिप्रसक्तो भोगेषु रागो भवति दोषकृत्।
परस्त्रीषु परस्वेषु किञ्चित् प्रार्थनयाऽपि च॥
रोषोऽमर्षोऽभ्यसूया च द्रोहो मिथ्याभितर्कितम्।
दुःखार्हञ्चेति तत्त्वज्ञैर्द्वेषः षोढाऽभिधीयते॥
य उष्मा हृदये जन्तोः समुत्तिष्ठति वैकृतः।
परानिष्टचिकीर्षायां स रोष इति संज्ञितः॥
रोषोद्भवसमुत्थेन दोषेणैवाभिवेदितः।
किञ्चिद्दृष्ट्वैव यो द्वेषस्तदमर्षस्य लक्षणम्॥
परस्य शुद्धान्दृष्ट्वा तु स्वगुणाभ्यधिकान् गुणान्।
नाभिनन्दति यो द्वेषात् साऽभ्यसूयेत्युदाहृता॥
सुहृदामपि यो नित्यमर्थानुपजिघांसति।
असौहृदमतिः पापस्तथा द्रोहोऽस्य लक्षणम्॥
यः साधूनपदोषांश्च मन्यते दोषकारिणः।
मिथ्या वितर्कितञ्चेति तदाकुभावदोषजम्॥
द्वेषाल्लोभाच्च संकल्पाच्चिन्तनं पापकर्मणाम्।
दुःखार्हमिति विज्ञेयं पूर्व्व-दुष्कृतसम्भवम्॥

दुःखान्मिथ्याभिमानाच्च द्वेषोऽयं षड्विधो भवेत् ।
ज्ञानात् कालात्ययाद्धर्मात् [१]प्रीतेश्च विनिवर्त्तते ॥
अतत्त्वश्रवणं तापो वेपथुर्ज्ञानिसंप्लवः ।
खेदोऽचिरोगः पारुष्यं श्वासस्तु द्वेषरोधतः ॥
सर्व्वत्रोत्कृष्टमात्मानं सर्व्वेभ्यो योऽभिमन्यते ।
स मान इति विज्ञेयो यथेष्टं स्पष्टवक्रिणः ॥
निरस्यात्माभिमानेन या उत्कृष्टिर्न शोभते ।
उत्कृष्टिर्यावता प्राकृतत्कृष्टिस्याऽवमानतः ॥
परार्थं परभोगांश्च परसामृद्धमेव च ।
दृष्ट्वा श्रुत्वा तु या तृष्णा जायते लोभ एव सः ॥
अलोभमूलतर्काच्च पिपासापरिवर्द्धितः ।
अनर्थेष्वेव संमोह्य लोभः पतति दुर्नरम् ॥
नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
तस्माच्च लोभसंज्ञां तां तृष्णां विद्वान् परित्यजेत ॥
प्राप्याऽपि मेदिनीं कृत्स्नां तृष्णा प्रायो न शाम्यति ।
विवर्द्धते हि भूयोऽपि हविषेव विभावसुः ॥
दुःखादित्वाद्दुरन्तत्वादनन्तत्वादतृप्तितः ।
पश्चाच्छोकावसत्त्वाच्च न कश्चिच्छ्रेयसी तृषा ॥
कुल-बुद्धि-वपुर्विद्या वित्तैश्वर्य्य-विभूतिभिः ।
स्वैरेतैर्बाधते योऽन्यान् स तन्मोहस्य लक्षणम् ॥
देवासुरमनुष्याणामुत्सिक्ता मदहेतवः ।

---

१ (ग) पुस्तके प्रीतेश्चैव निवर्त्तते ।

उत्पत्त्यैव विनेशुस्ते तस्मात्त्याज्यो मदो बुधैः ॥
हर्षशोकापलापाच्च दम्भाद्दर्पाच्च गर्व्वतः।
अन्ये च तद्विधा भावास्ते मदस्य विकल्पजाः ॥
अनिष्टयोगजाद्द्वेषात् स्नेहाविष्टाच्च योगजात्।
क्लेशाच्च हृदि यद्दुःखं स शोक इति पठ्यते ॥
अनित्याः सर्व्वभावाश्चेत् शोकस्तत्र निवर्त्तते।
अथवा यदि नित्याः स्युरतः शोकः प्रवर्त्तते ॥
नैवं शोचेच्च संत्त्वस्थस्तामसो वापि केवलम्।
शोकाद्दुःखमवाप्नोति समासेनेह मानवः ॥
इदं ममेति यः स्वाम्यमात्मनोऽर्थेषु मन्यते।
अजानंस्तदनित्यत्वं ममत्वमिति तद्विदुः ॥
अहमित्यभिधानेन यः क्रियासु प्रवर्त्तते।
कार्य्यकारणयुक्तासु तदहङ्कारलक्षणम् ॥
अहङ्कार-ममत्वाभ्यां वध्यन्ते सर्व्वदेहिनः।
संसारविनियोगेषु ताभ्यां मुक्तश्च मुच्यते ॥
आत्मबाधकरं श्रुत्वा दृष्ट्वा वा प्रत्युपस्थितम्।
उद्वेगो जायते यस्तु हृदये तद्भयं स्मृतम् ॥
तावद्भये न भेतव्यं यावद्भयमनागतम्।
आगतन्तु भयं दृष्ट्वा प्रवर्त्तव्यमभीतवत् ॥
भवितव्यं भवत्येव नास्ति कर्म्मव्यतिक्रमः।
इत्येवं दृष्टतत्त्वानां न क्वचित् जायते भयम् ॥
आत्मनोऽभ्युदयं दृष्ट्वा परेभ्यो व्यसनानि च।

आनन्दो मानसो ऽन्तोर्हर्ष इत्यभिधीयते ॥
सर्व्वद्रव्येष्वनित्येषु चणिकेष्वसुखेषु च ।
न हर्षस्यावकाशोऽस्ति विमृश्य यदि पश्यति ॥
माध्यस्थमपि दोषाय परेषां व्यसनागमे ।
किं पुनर्मूढभावेन प्रमोदस्य परिद्रवे ॥
यो वृथा चिन्तयेदर्थान् मनसा हि परस्परम् ।
मोघचिन्तेति तां प्राहुर्धर्म्मकर्म्मोपघातिनीम् ॥
लाभैश्वर्य्यधनादीनि लोभाद्यः संस्मरेत् सदा ।
स मोघचिन्तस्यात्मानं हन्ति बुद्धिस्य कर्म्म च ॥
तस्मादिदूरगां चिन्तां त्यक्का शोकस्य कर्म्मजम् ।
आरभेत शुभं कर्म्म ध्रुवप्राप्तस्य सर्व्वशः ॥
राग-सङ्कल्पजान् दोषान् हृदये सुदृढार्पितान् ।
उच्छिद्य ह्येतान् मेधावी तत्त्वज्ञानासिना द्रुतम् ॥
आत्मदोषचयोपायमनित्यासेध्यतां तनोः ।
हितञ्च सर्व्वभूतानां चिन्तयेत् मनसा सह ॥
एते मनोभवा दोषा द्वादशाऽशिवहेतवः ।
मोहादयः समाख्याता देवासुर-नृ-मोहनाः ॥
सत्संयोगान् मनोगुप्ते ज्ञानधर्म्मप्रसङ्गतः ।
त्यागाच्च व्यसनादीनां हानिङ्गच्छन्ति (?) मानवाः ॥
अप्रकाशकरीं बुद्धिं तम आवृत्य धर्म्मतः ।
प्रथमं जायते मोहो देहिनां हृदि पाप्मजः ॥
मोहादुत्पद्यते रागो रागाद्दुःखं प्रजायते ।

त्रिभिरेतैर्भवत्येवं पापं शारीरवाङ्मयम् ॥
तस्माद्गरीयः सर्व्वेषु मानसेष्वपि च त्रयम् ।
सर्व्वान् दोषान् परित्यक्तुं त्रीणेतान् प्रथमं त्यजेत् ॥

वाङ्मयानभिधाय पापदोष इत्यनुवृत्तौ देवलः,—

ततो हिंसाऽपचारः स्तेयमर्थदूषणमिति चतुर्विधाः शारीरजाः ।

हिंसादिलक्षणमभिधाय पुनर्देवलः,—

वेश्म-क्षेत्र-शस्यदहनं सेतुभेदनं मांजीवोपघातनम् । क्षत-प्रणाशनं द्रव्यापध्वंसनञ्चार्थदूषणमित्येतम् ।

मनुः,—

आचार्य्यं नीतिवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद्ब्राह्मणं गांश्च सर्व्वांश्चैव तपस्विनः ॥
ब्राह्मणायावगुर्य्यैव द्विजातिर्वधकाम्यया ।
शतं वर्षाणि तामिस्रे नरके परिपद्यते[१] ॥
ताडयित्वा तृणेनापि संरम्भान्मतिपूर्व्वकम् ।
एकविंशतमा जातीः पापयोनिषु जायते ॥

जातीर्जन्मानि ।

अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः ।
दुःखं स महदाप्नोति प्रेत्याप्राज्ञतया नरः ॥
शोणितं यावतः पांशून संगृह्णाति महीतले ।
तावतोऽब्दानमुत्रान्यैः शोणितोत्पादकोऽद्यते ॥

अमुत्र परलोके । अद्यते भक्ष्यते ।

१ क्वचित् अधिकं पद्यं विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ।

यमः,—

न कदाचिद्द्विजं रोषात्तस्मादश्नवरेदपि (?) ।
न ताडयेत् तृणेनापि न गात्राच्छ्रावयेदसृक् ॥
अश्नवर्य्यस्त्वब्दशतं सहस्रमभिहन्यते ।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥
शोणितं यावतः पांशून् संगृह्णाति द्विजन्मनः ।
तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥

तत्कर्त्ता शोणितोत्पादनकर्त्ता ।

उशनाः,—

न ब्राह्मणस्यापदं कुर्य्यात् ।

यमः,—

वादेन ब्राह्मणं जित्वा हर्षं वै योऽधिगच्छति ।
श्मशाने पादपः स स्यात् कङ्क-गृध्रनिषेवितः ॥

हारीतः,—

देवा लोकास्तथा वेदा गावो यज्ञास्तथैव च ।
सर्व्वस्थानेषु भूयिष्ठं ब्राह्मणेषु व्यवस्थिताः ॥
पूजितैः पूजिता ह्येते दृष्टैर्दृष्टा भवन्त्युत ।
निन्दितैर्निन्दिता ह्येते तस्माद्विप्रोऽधिदैवतम् ॥

तथा,—

समीपस्थो दहत्यग्निस्तेजसैवेन्द्रियं तनुम् ।
मन्युना च दहेद्विप्रः कुलमायुर्गतिं यशः ॥

गतिः स्वर्गादिगतिः ।

आयसः प्रदहत्यग्निर्दूरात्तु दहति द्विजः।
तस्मात्तं पूजयेन्न्यायात् स हि तीव्रतरोऽनलात् ॥
छिन्नं रोहति शस्त्रेण दग्धं रोहति वह्निना
विप्रमन्युप्रदग्धस्य रोहणं नेह विद्यते ॥
ब्राह्मणानां प्रसादेन सर्व्वतः शान्तिमाप्नुयात्।

पूजनं प्रणामादिना। अर्च्चनं सुवर्णादिना।

यथा प्लवे नौर्महती प्रयुक्ता
सन्तारयत्याशु जलाच्च दुर्गात्।
दृष्ट्वा द्विजास्तद्वदिह क्षणेन
सन्तारयेयुर्महतोऽधमस्मात्[1] ॥

मनुः,—

परस्य दण्डं नो यच्छेत् क्रुद्धो नैनं निपातयेत्।
अन्यत्र शिष्यात् पुत्राद्वा शिक्षार्थं ताडयेदुभौ ॥

एनं दण्डम्। शिष्टिः शिक्षा।

याज्ञवल्क्यः,—

न निन्दा-ताड़ने कुर्य्यात् सुतं शिष्यञ्च ताड़येत्।
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान् ॥
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत्।

विष्णुः,—

अथ कथञ्चन नावमन्येत। यथा एवं स्त्रीं नावमन्येत। नाभ्यवहसेत्। न हीनानुपहसेत्।

---

१ (ग) — दुर्गात्।

मनुः,—

क्षत्त्रियञ्चैव वैश्यञ्च ब्राह्मणञ्च बहुश्रुतम्।
नावमन्येत वै दृष्टं मनसाऽपि कदाचन॥
एतत्त्रयं हि पुरुषं निर्द्दहत्यवमानितम्।
तस्मादेतत् प्रयत्नेन नावमन्येत बुद्धिमान्॥
नात्मानमवमन्येत सर्व्वाभिरसमृद्धिभिः।
आमृत्योः श्रियमीहेत नैनामीहेत दुर्लभाम्॥

शङ्खलिखितौ,—

न शिष्टानसत्कुर्य्यात्।

बौधायनः,—

दैन्यं शाठ्यं तैक्ष्ण्यं च वर्ज्जयेत्।

अथाप्युशनो—वृषपर्व्वदुहितुश्चोसम्वादे गाथामुदाहरन्ति।

स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः।
अथाहं स्तूयमानस्य ददतो ऽप्रतिगृह्णतः॥

देवलः,—

आत्मानं न शपेत् कोपादरुजो न स्वपेद्दिवा।
न नक्तं विलिखेद्भूमीं गाश्च रात्रौ न सम्विशेत्॥
न नदीषु नदीं ब्रूयात् पर्व्वतेषु च पर्व्वतम्।
नान्यं प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च॥
आवासे भोजने वापि न त्यजेत् सहयायिनम्।
देवान्नृपान्नृषींश्चैव आसप्तमपदं व्रजेत्॥
ब्राह्मणान्नृपतीन् वृद्धान् गाश्च साधून् शिशूनपि।

नाक्रोशेन्नावमन्येत पूजयेद्दैवतन्तथा ॥

नावगाहेदपो नग्नो वह्निञ्चापि व्रजेत् पदा ।

शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं विलेपयेत् ॥

अत्र नेत्यनुवर्त्तते तेन न विलेपयेदित्यर्थः ।

विष्णुः,—

न सर्पशस्त्रैः क्रीड़येत् ।

मनुः,—

अनातुरस्वानि खानि न स्पृशेदनिमित्ततः ।

रोमाणि च रहस्यानि सर्व्वाण्येव विवर्ज्जयेत् ॥

न पाणि-पाद-चपलो न नेत्र-चपलोऽनृजुः ।

न स्याद्वा कृपणश्चैव न परद्रोहकर्म्मधीः ॥

तथा,—

न कुर्व्वीत वृथाचेष्टां न वार्य्यञ्जलिना पिबेत् ।

नोत्सङ्गे भक्षयेद्भक्ष्यान् न जातु स्यात् कुतूहली ॥

न नृत्येन्न तथा गायेत् न वादित्राणि वादयेत् ।

न चास्फोटयेन्न च क्ष्वेडेत् न च रक्तो विरावयेत् ॥

आस्फोटः स्कन्धाधोदेशे पाणिनाऽभिघातः । क्ष्वेडनं सिंह-नादः । संरक्तो हर्षणः । विरावो विकृतारावः ॥

तथा,—

बालातपः प्रेतधूमो वर्ज्ज्यो भिन्नं तथासनम् ।

न छिन्द्यान्नखरोमाणि न च छिन्द्यान्नखैस्तृणम् ॥

न निष्फलं कर्म कुर्य्यान्नायत्यामसुखोदयम् ।
लोष्टमर्द्दी तृणच्छेदी नखच्छेदी च यो नरः ।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव सः ॥
नाक्षैः क्रीडेत् कदाचित्तु स्वयं नोपानहौ हरेत् ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥

तथा,— नैकः स्वप्यात् शून्यगृहे न शयानं प्रबोधयेत् ।
नोदक्यामभिभाषेत यज्ञं गच्छेन्न चावृतः ॥

वशिष्ठः,—

नाङ्गे नखवादनं कुर्य्यात् । न चापोऽञ्जलिना पिबेत् । न पादेन पाणिना वा जलमभिहन्यात् । नेष्टकाभिः फलानि पातयेत् [न फलेन फलम्] । न कल्को न कुहको भवेत् । न म्लेच्छभाषां शिक्षेत् ।

तथाप्युदाहरन्ति,—

न पाणिपादचपलो न नेत्रचपलो भवेत् ।
न वाक्चपलो विप्र इति शिष्टस्य गोचरः ॥

गौतमः,—

न पदा आसनमाकर्षेत् । न शिश्नोदरपाणिपाद-चक्षु-श्चापल्यानि कुर्य्यात् । छेदन-भेदनविलिखनविमर्द्दनस्फोटनानि न कुर्य्यात् ।

अत्र स्फोटनं हस्ताद्यङ्गविस्फोटनं बोध्यम् ।

शङ्खलिखितौ,—

न भूमिं विलिखेत् । न पदाऽभिहन्यात् ।

यमः,—

न गायेन्न च नृत्येत्तु नाच्चैः क्रीड़ेत् कदाचन।
नैकवस्त्रेण भोक्तव्यं न नग्नः स्नानमाचरेत् ॥
स्वप्तव्यं नैव नग्नेन उच्छिष्टस्तु न संविशेत्।
न गच्छेन्न पठेच्चैव न स्पृशेच्च तथा शिरः ॥

उच्छिष्टस्तु न संविशेन्न शयीत न गच्छेत् न पठेत्। न शिरः स्पृशेदित्यर्थः।

हारीतः,—

न पथि मूत्र-पुरीषं श्लेष्मां वोत्सृजेत्। नौष्ठिनिष्कुषण-कुट्टनलोष्टमर्द्दनं लेखाभिलिखन-करजदशन-वीणावादनानि वर्ज्जयेत्। तथा मालाऽवलेपं प्रमादकरणं विविधाङ्गचेष्टाश्च मद्यशुक्रविकारांश्च वर्ज्जयेत्।

निष्कूषणं नखैर्वितुषीकरणमवलेपो गर्व्वः ॥

मनुः,—

केशग्रहान् प्रहारांश्च शिरस्येतानि वर्ज्जयेत्।
न चैव प्रलिखेत् भूमिं नात्मनोपहरेत् स्रजम् ॥

विष्णुः,—

न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनस्तनुं उदरञ्च।
न दधि-सुमनसौ प्रत्याचक्षीत ॥

आपस्तम्बः,—

पृष्ठतश्चात्मनः पाणी न सन्धापयेत् ॥

याज्ञवल्क्यः,—

नोच्चैः क्रीडेदाधर्म्मज्ञैर्व्याधितैश्च न संविशेत् ।

विरुद्धं वर्ज्जयेत् कर्म्म प्रेतधूमं नदीतरम् ॥

अक्षग्रहणं द्यूतमात्रोपलक्षणम् । नदीतरं नदीतरणं बाहुभ्यां वर्ज्जयेदित्यर्थः ।

आपस्तम्बः,—

पदा पादस्य प्रक्षालनमधिष्ठानञ्च वर्ज्जयेत् । प्रेङ्खोलनञ्च पादयोः । जानुनि चात्याधानं जङ्घायाः । नखैश्च नखवादनानि चाकारणात्, यच्चान्यत् परिचक्षते ।

प्रेङ्खोलनमितस्ततश्चालनमत्याधानमत्यारोहणम् । यच्चान्यन्निषिद्धं परिचक्षते शिष्टास्तदपि न कार्य्यमित्यर्थः ।

शङ्खलिखितौ,—

न पादं पादेन प्रक्षालयेत् । न दर्भैः परिमृज्यात् । पादौ परितापयेत् । कुशेषु न परिमृजेत् । न कांस्यभाजने धावयेत् ।

दर्भशब्दः कुशातिरिक्तदर्भपरः ।

यमः,—

न कांस्ये शोधयेत् पादौ यत्र स्यादपि भोजनम् ।

यत्र स्यादपि भोजनमित्यनेन कांस्यपात्रमशुचि पादधावने भवतीत्युक्तम् । न चाधर्म्म एव भवतीत्यर्थः ।

---

१ मूले स्फोटभानीत्यधिकः पाठः ।

अङ्गिराः,—

गण्डूषं पादशेकञ्च यः कुर्य्यात् कांस्यभाजने।

भूमौ निःक्षिप्य षण्मासान् पुनराकरमाविशेत्॥

हारीतः,—

न देवगुरुब्राह्मणसमीपे पादौ प्रसारयेत्॥

देवलः,—

अशुद्धः शयनं स्नानं स्वाध्यायं यानवाहनम्।

बहिर्निष्क्रमणञ्चैव न कुर्व्वीत कथञ्चन॥

स्वप्नमध्ययनं स्नानमुच्चारं भोजनं गतिम्।

उभयोः सन्ध्ययोर्नित्यं मध्याह्ने च विवर्ज्जयेत्॥

अशुद्धोऽशुचिः। स्नानं वैधम्। यानवाहनं अश्वादिवाहनम्।

याज्ञवल्क्यः,—

गोब्राह्मणाग्नीनस्नातो नोच्छिष्टो न पदा स्पृशेत्।

शङ्खलिखितौ,—

नाग्निं ब्राह्मणञ्च पादेनाधितिष्ठेत्। नाशुचिरग्निं परिचरेत्। न पितृ-देवताः कीर्त्तयेत्। नागाधोदकमवगाहेत्। न गामग्निञ्च एकतो धारयेत्।

पितरोऽग्निष्वात्तादयः। देवता विष्ण्वादयः। अशुचिरित्यत्रानुवर्त्तते। एकतः एकस्मिन् हस्तादौ।

वृद्धशातातपः,—

विद्यमानेन हस्तेन ब्राह्मणो ज्ञानदुर्ब्बलः।

तोयं पिबति वक्त्रेण श्वाऽसौ जायेत नान्यथा॥

एतच्च अताभिलिखिता दृष्टा स्पृष्टा पीतेति दर्शनात्—गङ्गाव्यतिरेकेण द्रष्टव्यम् ॥

तथा,—

उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥

अभक्ष्यमित्यनुवृत्तौ वशिष्ठः,—

अन्तर्नाव्युदकं नौस्थं तोयम् ।

न पिबेदित्यर्थः ।

आपस्तम्बः,—

अग्निमपश्च न युगपद्धारयेत् । नानाग्नीनां सन्निवापं वर्ज्जयेत् । सन्निवापः संसर्गः ।

गौतमः,—

नापोऽमेध्येन संसृजेत् । नापोऽञ्जलिना पिबेत् । न तिष्ठन् । संसृजेत् संयोजयेत् । न नग्नो जलमुपेयात् । न निष्ठीवेत् । नोत्तरेदनुपस्पृश्य । नापः पिबेदञ्जलिना । नानुद्धृताभिरद्भिः कार्य्यं कुर्य्यात् । नाप्सु रेतो-विण्मूत्र-पुरीषाणि चोत्सृजेत् ।

मनुः,—

नाप्सु मूत्रपुरीषाणि ष्ठीवनं वा समुत्सृजेत् ।
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥

आपस्तम्बः,—

निष्ठीवन-मैथुनकर्म्माप्सु वर्ज्जयेत् ।

तथा,—

व्यतिक्रमेन स्रवन्तीं ज्वलनं ज्वलितं तथा।
चैत्यवृक्षन्न वा छिन्द्यात् नाप्सु श्लेष्माणमुत्सृजेत् ॥
न शुक्रं न विषं न मूत्रपुरीषं न लोहितम्।
नास्थि-भस्म-कपालानि न केशान् न च कण्टकान् ॥

मनुः,—

नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम्।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥
अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत्।
न चैनं पादतः कुर्य्यान्न प्राणबाधमाचरेत् ॥

देवलः,—

नावेक्षेताशुचिः कूपं घर्षयेन्न पदा पदम्।
अग्निं न प्रक्षिपेदग्नौ अद्भिः प्रशमयेन्न च ॥

न चाग्निमद्भिः प्रशमयेदित्यर्थः।

तथा,—

प्राणोपघातमन्येषां न युद्धादिभिराचरेत्।
सुहृन्मरणमार्त्तिं वा स्वयं न श्रावयेत् परान् ॥

तथा,—

अभिभोगेन मित्राणि वाणिज्येनैव पीड़येत्।
दारिद्र्याद्धि दरिद्रोऽपि मन्यते मित्रपीड़नम् ॥
प्राणिनो हिंसितव्याश्च क्लिष्टघातं न घातयेत्।
अपण्यं कूटपण्यं वा विक्रये न प्रयोजयेत् ॥

न वह्निं मुखनिश्वासैर्ज्वालयेद्धर्मतत्त्ववित् ।
नावगुण्ठेद्वृथा ग्रस्तं गो-गुरु-स्त्री-कुमारके ॥
पुण्यस्थानोदकस्थाने सीमानं कर्षयेन्न च ।
न भिन्द्यात् समयं पूर्व्वमभ्युपेतं कदाचन ॥
अविश्वासो हि पापिष्ठो भवेत् समयभेदनात् ॥
निक्षेपोपनिधी प्राप्तौ तथैव पुनरर्पयेत् ।
दत्तापलपनं चाप्येनैरकद्वारमुच्यते ॥
यः पापिष्ठो नरः कुर्य्यात् तिर्य्यग्योनिषु मैथुनम् ।
वियोनिगमनाद्भूयः स वियोनिषु जायते ॥
परस्परं पशून् बालान् पक्षिणो नावबोधयेत् ।
परस्य बाधां नेच्छेत जलवातायनादिभिः ॥
कारयित्वा स्वकर्म्माणि कारून् पश्चान्न वञ्चयेत् ।
कर्म्मानुरूपमेतेषां प्रयच्छेद्भक्तवेतनम् ॥
प्रतिवेश्म स्ववेश्माभ्यामन्यच विनिवर्त्तयेत् ।
प्रदीप्तगृहमासन्नमङ्घ्रियायात्त्वरान्वितः ॥
सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत् ।
न चिरं वासयेत् कन्यां स्वामी प्राप्तफलां गृहे ॥

प्राणिन इत्यादि—क्लिष्टघातं बहुक्लेशपूर्व्वकम् । तेन प्राणिनां वैध्यां हिंसायां बहुक्लेशपूर्व्वकम् न हिंसा कार्य्येत्यर्थः । नावगुण्ठेद्वृथा । हास्यार्थमपीत्यर्थः ।

निक्षेपः प्रकाशसमर्पितं द्रव्यं, उपनिधिरिह अनिर्य्यातस्वरूपं समर्पितं द्रव्यं, जलं जलवातायनं प्रणालिकादि, वातायनं गवाक्षः ॥

काङ्क्षन् कर्मकरान् प्रतिलेभ्य-सुखेभ्याभ्यामिति समीपगृह-परमग्निप्रदीप्तमासन्नमित्यभिधानात्। भिक्षार्थं भिक्षानिवृत्त्यर्थे नानुघर्ट्टयेत् न निदध्यात्। खाम्यच पिपादिः। फलां रतिपुत्रफलयोग्याम्॥

पैठीनसिः,—

न खादन् तिष्ठेत्। न हसन् जल्पेत। नाग्निं जघ्रयेत्। समिद्धमग्निं हस्ताभ्यां न स्पृशेत्। नोदके चिरं स्नायात्। हस्ताभ्यामित्यङ्गमात्रोपलक्षणम।

उशनाः,—

नदी-पूर-वृक्ष-निष्कूट-चतुष्पथ-स्त्रीणां प्रतरणावगाहनाधि-रोहणप्रसेषणसंभाषणादि वर्ज्जयेत्।

पूरः प्रवृद्धजलप्रवाहो नद्यन्यः। निष्कूटः कोटरः अत्र पूरनद्याः प्रतरणावगाहने वृक्षनिष्कूट-चतुष्पथेष्वधिरोहणमत्यन्तक्रमणम्। परस्त्रियामालिङ्गनसम्भाषणे, इत्येवं परिवर्ज्जनीयानीत्यर्थः।

तथा,—

न वस्त्रेण वीजयेत्।

आपस्तम्बः,—

दिवा च शिरःप्रावरणवर्ज्जनं मूत्र-पुरीषयोः कर्म्म परिहाप्य।

गोतमः,—

न प्रावृत्याहनि पर्य्यटेत्। प्रावृत्य रात्रौ पर्य्यटेत्।

इत्यंच स न हीयते इत्यर्थः।

॥ इति गृहस्थरत्नाकरे क्रोधादिवर्ज्जनतरङ्गः॥

## अथ परदारादिवर्ज्जनम् ।

तत्र मनुः,—

न हीदृशमनायुष्यं लोके किञ्चन विद्यते ।
यादृशं पुरुषस्येह परदाराभिमर्षणम्[1] ॥

व्यासः,— स्वकर्म्मनिरतो नित्यं स्वदारनिरतो भवेत् ।
सेवनात् परकीयाणां नरकं दारकर्म्मणाम् ॥

देवलः,—

अगम्यागमनमपचारः । परभार्य्या वर्णोत्तमा स्वदुहिता सगोत्रा चाण्डाली पतिता प्रव्रजिता तिर्य्यग्योन्यश्चागम्याः ।

वर्णोत्तमाः स्वस्ववर्णोत्तमाः ।

गम्यानामपि कन्यानां दूषणं पापमुच्यते ।
पुमांस्तां यदि गृह्णाति गान्धर्व्वसमयो भवेत् ॥

गम्यानां विवाहेन[2] । दूषणं रागप्रयुक्तचुम्बनाश्लेषणादि ।

याज्ञवल्क्यः,—

परशय्यासनोद्यानगृहयानानि वर्ज्जयेत् ।
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥

अदत्तानि परेणाप्यननुमोदितानि ।

मनुः,— यानशय्यासनान्यस्य कूपोद्यानगृहाणि च ।
अदत्तान्युपभुञ्जान एनसः स्यात्तुरीयभाक् ॥

॥ इति गृहस्थरत्नाकरे परदारादिवर्ज्जनतरङ्गः ॥

---

१ (ग) पुस्तके परदारोपसेवनं । २ (ग) पुस्तके विवाहार्हाणां ।

# अथ सङ्करवर्ज्जनम्।

बृहस्पतिः,—

विप्रे योनिं समासाद्य सङ्करं परिवर्ज्जयेत्।
मानुष्यं दुर्लभं लोके ब्राह्मण्यमधिकन्ततः॥
एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्।
याजनाध्यापने योनिस्तथा च सहभोजनम्॥
नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह।
उत्तमैरुत्तमैः सार्द्धं कर्त्तव्यस्तु समेन वा॥

योनिरिह यौनः सम्बन्धः। सहभोजनमत्रैकपात्रभोजनम्।

यमः,— ब्राह्मणं परिरचेत नानायोनि-निषेवणात्।
दुष्टेभ्यो व्यवहाराच्च तथा दुष्टप्रतिग्रहात्॥
अशुभेभ्यश्च कर्म्मभ्यः संसर्गादशुभैः सह।
संसर्गगामिनो ह्येते हेतवः सद्भिरीरिताः॥
सम्बन्धाद्गात्रसंस्पर्शात् शयनासनभोजनात्।
श्वपचालापसंवासात् नग्नस्य च विलोकनात्।
अनृतभाषणात् वादात्कूटसाच्यप्रवादनात्।
परद्रव्यापहाराच्च पापं संक्रमते नृणाम्॥
भाण्डसङ्करसङ्कीर्णा योनिसङ्करदूषिताः।
अन्नसङ्करसङ्कीर्णा वियोनिं यान्ति वै द्विजाः॥

नानायोनिनिषेवणात् विजातीयानेकयोन्यभिगमनात्, दुष्टप्रतिग्रहात् पतितादिप्रतिग्रहात्। संव्यवहारः परस्परं गृहगमनादि। अशुभेभ्यश्चौर्य्यादिभ्यः।

हारीतः,—

आशापाहारसंस्पर्शाभिःश्वासादपि चैव च।
एकशय्यासनाभ्याञ्च पापं संक्रमते नृणाम्॥
हन्यादशुद्धः शुद्धन्तु शुद्धोऽशुद्धन्तु शोधयेत्।
अशुद्धस्तु तमोभूतः शुद्धवासेन शुध्यति।
तयोर्यश्च भूयिष्ठं शुद्ध्यशुद्धी ततः स्पृशेत्॥

बौधायनः,—

गुरुसङ्करिणश्चैव शिष्यसङ्करिणश्च ये।
आहारमाचसङ्कीर्णा दीर्घं तम उपासते॥

हारीतः,—

यानशय्यासनान्यप्रहार्य्याण्येके मन्यन्ते। तत्र वस्तुविशेषात् शुक्लमलिनसंसर्गात् पापसंसर्गात् व्याधिसंसर्गयोगाच्च। तस्माच्च पृथक्शौचाः श्रेयांस इति। स्वानुपपत्तौ शुद्धान्तर्धाय समापयन्ति।
अत्यन्तसंसर्गे सचेलं स्नानम्। एवं हि,—

आसनं शयनं यानमन्तर्धाय समाचरेत्।
ब्रह्मसूत्रोपानहस्त्रं धृतमन्यैर्न धारयेत्॥
न चैकभोजनं प्राज्ञ-ब्राह्मणानां स्वकैरपि।
प्रसङ्गात्कर्मदोषाच्च पृथक्शौचास्तथा परे॥

वर्णविशेषाच्छुक्लमलिनयोः संसर्गदर्शनेन शुक्लस्य वर्णविशेषादन्यथाभावादित्यर्थः। स्वानुपपत्तिः स्वस्यासनादेरनुपपत्तिः। शूद्धान्तर्धाय शुद्धं वस्त्रादिकमन्तर्भाव्य। ब्रह्मसूत्रं यज्ञोपवीतं

अन्यधृतं सर्व्वथैव न धार्य्यम्। उपासङ्गस्ते तु कृतशौचे अग्नौ धार्य्यौ। निर्णिज्याग्नाविति गोतमोक्तेः।

एकभोजनमित्येकस्मिन् पात्रे पङ्क्तौ च भोजनं स्वकीयज्ञातिभिः। प्रसङ्गादन्येन पापकर्म्मणाऽपि सह कदाचित् केनापि कारणेन एकपङ्क्त्यादिभोजनप्रसक्तेः।

बृहस्पतिः,—

एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम्।
भस्मना कृतमर्य्यादा न तेषां सङ्करो भवेत्॥
अग्निना भस्मना चैव सलिलेन विशेषतः।
द्वारेण स्तम्भमार्गेण षड्भिः पङ्क्तिर्विभिद्यते॥

एभिः षड्भिः पङ्क्तिदोषो न भवतीत्यर्थः॥

॥ इति गृहस्थरत्नाकरे सङ्करवर्ज्जनतरङ्गः॥

## अथ त्याज्यात्याज्याः ।

शङ्खलिखितौ,—

अत्याज्या माता पिता सपिण्डास्तथा । गुणवन्तः सर्व्वे एवात्याज्याः ।

गुणवन्तोऽत्र विद्याकर्म्मशालिनः ॥

देवलः,—

पितरं भ्रातरं पुत्रं पुत्रिकां भगिनीं स्नुषाम् ।
न त्यजेत् दोष-लोभाभ्यां स्वदारान् पतितानपि ॥
मातृत्यागो हि शास्त्रेषु नोपदिष्टः कथञ्चन ।
पतिता वाऽभिशप्ता वा न माता त्यागमर्हति ॥
कुलवृद्धा वयोवृद्धा ज्ञानवृद्धास्तु मानवाः ।
शीलवृद्धास्तु सम्पूज्या यथा स्वगुणगौरवात् ॥

पतितानिति पित्रादिभिः पूर्व्वनिर्द्दिष्टैः सर्व्वैः सहान्वीयते ।

हारीतः,—

पिता तु जनको मर्त्यैश्छन्दःस्वाचार्य्य उच्यते ।
तस्मादेतान् सदा विद्वान् पूजयेन्न परित्यजेत् ॥
परित्यागात्तथैतेषान्न तान् लोकान् स विन्दति ।
अशुद्धौ तु परित्यागः पातकेऽयाज्ययाजने ॥
याजने चैव याज्ये च न पितुस्त्याग उच्यते ।
परित्यजन्ति ये रागादुपाध्यायं कथञ्चन ॥
अवमानयन्ति ये मोहात्तु तेषां निष्कृतिः स्मृता ।

छन्दःसु वेदेषु, शुद्धिविरहोऽयाज्ययाजनजन्यं पापम्। उपाध्याये च याज्ये च अनन्तरोक्ताशुद्धौ परित्याग इत्यन्वयः। न पितुस्त्यागः पूर्व्वोक्ताशुद्धौ।

विष्णुः,—

भार्य्या पुत्रश्च बन्धुश्च संसृष्टः पापकर्म्मभिः।
परिभाष्योऽपरित्याज्यः पतितोऽपि तथैव च॥

इति सप्रक्रिय-महासान्धिविग्रहिकठक्कुर-श्रीवीरेश्वरात्मज-
सप्रक्रिय-महासान्धिविग्रहिकठक्कुर-
श्रीचण्डेश्वरविरचिते गृहस्थरत्नाकरे
त्याज्यात्याज्यतरङ्गः समाप्तः॥

अवशिष्टं भारतादिश्रवणञ्च आदर्शाभावान्न लिखितम्।

शाके वेदकराष्टचन्द्रमिलिते मार्गे च पक्षे सिते।
अष्टम्यां रविवासरे द्रुतमिदं रत्नाकरं सुन्दरम्।
श्रीशैलेन्द्रसुतासुतस्य चरणं स्मृत्वाऽलिखत् सोदरो
विप्रः श्रीबुधकाणवंशजसुधीर्धर्म्मेश्वरस्तार्किकः॥

श्रीराधाकृष्णाभ्यां नमः॥

ॐरामः।

समाप्तमिदं पुस्तकम्।

---

# गृहस्थरत्नाकरधृत संहिताकारनामानि।

## संग्रहग्रन्थनामानि ।



## संग्रहकारनामानि ।



पृ०

## पुराणनामानि ।

## अन्यान्यग्रन्थनामानि ।

# गृहस्थरत्नाकरधृतवचनानामकारादि-क्रमेण सूची ।

## ख



## ग



## घ



## च



## छ

## ज



## त



## द

## प

## श

ह

# शुद्धिपत्रम् ।

| पत्राङ्काः | पृष्ठाङ्काः | अशुद्धं | शुद्धं | पत्राङ्काः | पृष्ठाङ्काः | अशुद्धं | शुद्धं |
|---|---|---|---|---|---|---|---|
| १४ | ९ | नुपुरं | नूपुरं | २८४ | १४ | द्रव | द्रव्य |
| १७ | ५ | कारः | कारैः | २८७ | ५ | वशिष्ठ | वशिष्ठः |
| ३३ | १२ | चिकित्स्यं | अचिकित्स्यां | २९० | ५ | तिष्ठत् | तिष्ठेत् |
| ४५ | १ | अग्रद्धेयं | अश्राद्धेयं | ३०६ | २२ | ज्यष्ठा | ज्येष्ठा |
| ५६ | १९ | अपरःश्राद्ध | अपरश्राद्धः | ३२९ | १३ | भाष | भाव |
| ५६ | २२ | तदप्यद्यानां | तदप्याद्यानां | ३३३ | २ | जीर्ण्णन्तु | जीर्य्यन्तु |
| ५७ | १२ | दृष्ट | दृष्टं | ३३६ | १२ | प्रनिष्टस्तु | प्रविष्टन्तु |
| ६६ | १० | विषयेन | विषयेण | ३३८ | १५ | क्रूद्धा | क्रुद्धा |
| ७४ | ९ | मर्व्वं | सर्व्वः | ३३९ | १३ | जुङ्कलमौ | जुङ्कच्चमौ |
| ८५ | १० | लब्ध | लब्धुं | ३५४ | ८ | नाध्यल | लाघ्यल |
| १०१ | ९ | वालिशा | वालिशाः | ३६२ | ९ | अनुत्याय | उत्याय |
| १०३ | ९ | क्षतं | क्षतं | ३८४ | १८ | दोष | दोषं |
| १०७ | १८ | यज्ञ | यज्ञो | ३९४ | १३ | स्पृष्ट्वा | पांतव्या |
| १०८ | २० | श्रामाम— | श्रामुन— | ४०२ | ११ | नाकन्यां | माकन्यां |
| १३० | १२ | अभिध्याय | अभिधेयाथ | ४३० | १ | —नुप | नूपं |
| १६५ | १९ | आचमन | आचमने | ४४२ | ८ | क्षत | क्षतः |
| ८१ | ११ | प्रात | प्रातः | ४६२ | १६ | गरुयानि | पाच्यानि |
| ०८ | १२ | मैत्रावरुणौ | मैत्रायणीय | ४९० | २ | मनोरमेषु | मनोरथेषु |
| ११७ | १६ | नवण | प्रस्रवण | ५०४ | २२ | भूषयन् | दूषयन् |
| ३७ | ११ | मांसं | मांसं | ५०८ | २१ | दूषात् | दुष्टषात् |
| ५८ | १ | आयन्तु | आयान्तु | ५३७ | ४ | दकका | दका |
| ७६ | १५ | उदग्नि— | उदग्नि— | ५८८ | २ | द्वार— | माघ— |

---